भावयुक्त होकर ऐसा समझता है, वह ब्रह्मरूप होकर अमृतत्व को प्राप्त करता है।।५२-५३।।

**योऽसौ सर्वगतो देवः सर्वात्मा सर्वतोमुखः।**
**सर्वतत्त्वमयोऽचिन्त्यः सर्वस्योपरि संस्थितः।।५४।।**

**सर्वतत्त्वव्यतीतश्च वाङ्मनोनामवर्जितः।**
**सोऽहमेवमुपासीत निर्विकल्पेन चेतसा।।५५।।**

जो यह देव सर्वव्यापी, सर्वात्मा, सर्वतोमुख, सर्वतत्त्वमय, अचिन्त्य और सबके ऊपर स्थित है, साथ ही समस्त तत्त्वों से परे, वाणी, मन और नाम से रहित है, साधक को चाहिये कि वह ऐसे तत्त्व की, निर्विकल्प चित्त से 'सोऽहम्' के रूप में, अर्थात् अपने को उससे अभिन्न समझते हुए उपासना करे।।५४-५५।।

**देहं त्यक्त्वा शिवो ग्राह्यः दिव्यतेजोविजृम्भितः।**
**पुरातनं गृहं त्यक्त्वा नूतनं प्राप्तवानिव।।५६।।**

**चिदानन्दमयं नित्यं प्राप्तवानिव भावयेत्।**

जिस प्रकार पुरातन गृह को त्याग कर मनुष्य नवीन गृह को ग्रहण करता है, उसी प्रकार साधक को देह का त्याग कर शिव को ग्रहण करना चाहिये। साधक सदा ऐसी भावना करे कि मैं चिदानन्दमय और नित्य अपने स्वरूप को प्राप्त हूँ।।५६।।

**यदेवं निष्कलं ज्ञानं शाश्वतं ध्रुवमव्ययम्।।५७।।**

**निर्विकल्पमनिर्देश्यं हेतुदृष्टान्तवर्जितम्।**
**अलिङ्गमक्षरं शान्तं विषयातीतगोचरम्।।५८।।**

**अविभाव्यमसन्देहं तदहं नात्र संशयः।**
**धर्मधर्मिगताभेदादित्थमुक्तं सुबुध्यताम्।।५९।।**

उसे यह समझना चाहिये कि जो निष्कल, ज्ञान, शाश्वत, ध्रुव, अव्यय, निर्विकल्प, अनिर्देश्य, हेतुदृष्टान्त से रहित, अलिङ्ग, अक्षर, शान्त, विषयातीत विषय, अविभाव्य और असंदिग्ध है, वही मैं हूँ, इसमें संदेह नहीं। धर्म और धर्मी में वर्तमान अभेद के कारण ऐसा कहा गया है, इसे जानो।।५७-५९।।

**निर्मनश्चिन्मनोध्यानं निर्विकल्पमितीरितम्।**
**यत्किञ्चित् सविकल्पं तत् सूक्ष्मयोजनभासनात्।।६०।।**

मन से परे चित् से युक्त का ध्यान निर्विकल्पक कहा गया है। जो सविकल्पक होता है, वह सूक्ष्म संयोजन का आभास होने के कारण होता है।।६०।।

**दासोऽहमिति सम्मोहः सोऽहमिति परिभ्रमः।**
**अहमेव परिभ्रान्तिस्तस्मात् त्रीणि परित्यजेत्।।६१।।**

'दासोऽहम्' ऐसा ज्ञान संमोह कहलाता है, 'सोऽहम्' यह ज्ञान भ्रम है। 'अहमेव' यह ज्ञान भी भ्रम है। इसलिये तीनों का त्याग कर देना चाहिये।।६१।।

**शिवोऽहमस्मि सिद्धान्तं वेदान्तं सोऽहमस्मि तु।**
**इत्युक्तेः सोऽहमेकत्र सर्वत्रेति न शब्दितम्।।६२।।**

'शिवोऽहम्' यह भावना शैवसिद्धान्तमतानुसारिणी है। 'सोऽहमस्मि' यह वेदान्त का सिद्धान्त है। इस रूप में व्यक्त 'सोऽहम्' एक स्थान पर नहीं, सर्वत्र मिलता है।।६२।।

**शिवात्मकशिवारोपात् स्वात्मा शिवस्वभावतः।**
**शिवोऽहमस्मि चेत्युक्तध्यानं कुर्यादनुत्तमम्।।६३।।**

शिवात्मक शिव का आरोप होने के कारण आत्मा शिव स्वभाव वाला है। इसलिये साधक को 'शिवोऽहम्' यह सर्वोत्तम ध्यान करना चाहिये।।६३।।

**शिवेति चिन्तनं वापि शिवयोगं प्रकीर्तितम्।**
**शिवस्य दर्शनं ज्ञानं योगस्तत्रैकचित्तता।।६४।।**

**बौद्धी च पौरुषी चिन्ता सकले निष्कले पृथक्।**
**शिवस्वशिवचिन्तेति द्विचिन्ता तु मुहुर्मुहुः।।६५।।**

शिव का चिन्तन भी शिवयोग कहा गया है। सर्वत्र शिव का दर्शन शिवज्ञान और उस शिव का निरन्तर ध्यान शिवयोग कहलाता है। ज्ञान दो प्रकार का होता है— १. बौद्ध ज्ञान एवं २. पौरुष ज्ञान। ये दोनों

फिर सकल और निष्कल के भेद से दो-दो प्रकार के होते हैं। इसमें शिव और स्वशिव, अर्थात् जीवात्मा की चिन्ता इस प्रकार की ये दो चिन्तायें या ज्ञान बार-बार होती हैं।।६४-६५।।

**ध्यानं समाधिरेकाग्रा स्तिमितोदधिनिर्मला।**
**ध्यानोत्कृष्टपरावस्था समाधिरिति गीयते।।६६।।**

ध्यान ही प्रगाढ़ एवं निर्बाध होने पर चित्तैकाग्र्यरूप समाधि कही जाती है। यह शान्त निस्तब्ध समुद्र की भाँति निर्मल होती है। ध्यान की उत्कृष्ट परावस्था समाधि कही जाती है।।६६।।

**अङ्गयोगोऽयमङ्गी द्विशिवसाक्षात्कृतिद्वयम्।**
**सोऽहङ्कारसुधीशैवीवृत्तिव्यक्तद्विचिन्तया।।६७।।**

ध्यान आदि का अंगयोग में समावेश होता है। सविकल्पक और निर्विकल्पक के भेद से भिन्न योग आत्मशिव और परशिव का साक्षात्कार कराता है। ऐसे सुधी योगी की द्विविध चित्तवृत्ति इनका साक्षात्कार कराती है।।६७।।

**प्रत्यक्पराक्द्विचिच्छक्त्या**
**चिन्त्यं स्वात्मशिवं शिवम्।**
**सकामाकामयोर्भेदात् सकलं निष्कलं तु वा।।६८।।**

प्रत्यक् तथा पराक् दो प्रकार की चित् शक्ति के द्वारा स्वात्म-शिव एवं परम-शिव दोनों का चिन्तन करना चाहिये। अथवा सकाम और निष्काम चिन्तन के भेद से तथा सकल एवं निष्कल के भेद से भी दो प्रकार के ध्येय होते हैं।।६८।।

**केवले कुम्भके ध्याने शून्यकुम्भसमाधिके।**
**यथा यथा मनो लीनं तथा स्फुरति निष्कलम्।।६९।।**

केवल कुम्भक का ध्यान करने पर शून्य कुम्भक समाधि में मन जैसे-जैसे लीन होता जाता है, वैसे-वैसे निष्कल शिव का स्फुरण होने लगता है।।६९।।

**शून्यान्ते कुम्भके जीवन्मुक्तिरुक्ता परापरा।**
**तस्यां साक्षात्कृतौ दृष्टं निष्कलं शुद्धसाक्षिकम्।।७०।।**

कुम्भक जब शून्यान्त हो जाता है, अर्थात् जब कुम्भक में कोई विषय नहीं बनता, तो वह अति उत्कृष्ट जीवन्मुक्ति कही जाती है। उस मुक्ति का साक्षात्कार होने पर निष्कल शुद्ध साक्षी का दर्शन होता है।।७०।।

**स्थूलसूक्ष्मातिसूक्ष्मा स्यात् साक्षात्कृतिरनिष्कला।**
**अथ पत्युरधिष्ठानं स्वशक्तिकिरणात्मकम्।।७१।।**

**तस्यां दिवि सुदीप्तात्मा निष्कम्पोऽचलमूर्तिमान्।**
**इति शुद्धशिवं प्रोक्तं निष्कलाद्यविशेषकम्।।७२।।**

अनिष्कल, अर्थात् सकल का साक्षात्कार पहले स्थूल होता है, बाद में क्रमशः सूक्ष्म और सूक्ष्मतर होता जाता है। यह सूक्ष्मतर विषय पति, अर्थात् शिव का स्वशक्तिकिरणात्मक अधिष्ठान है। इस अधिष्ठान रूपी द्यौः, अर्थात् चिदाकाश में जो सुदीप्त निष्कम्प और अचलमूर्तिमान् तत्त्व है, वह निष्कल आदि विशेषताओं से शुद्ध शिव कहा गया है।।७१-७२।।

**तस्मादेव परं तत्त्वमचलं सर्वतोमुखम्।**
**इत्यादिनिष्कलं प्रोक्तं मतङ्गाद्यागमे शिवम्।।७३।।**

इसीलिये मतंग आदि आगमों में शिव को परम अचल सर्वतोमुख और निष्कल तत्त्व कहा गया है।।७३।।

**सर्वे धर्मात्मनः सन्ति यमेव परिकल्पयेत्।**
**तत्तद् भवत्यसन्देहात् सदा तद्भावभावितः।।७४।।**

संसार में जितने पदार्थ हैं, वे सब किसी न किसी धर्म वाले होते हैं। उनमें से साधक अपने को जिस रूप में परिकल्पित करता है, निःसन्देह सदा उस भाव से भावित होकर वही हो जाता है।।७४।।

**सर्वज्ञं तु तमात्मानं परिपूर्णं सदा स्मरेत्।**
**सर्वज्ञः सर्वगः सूक्ष्मः सर्वेशः सर्वकृद्भवेत्।।७५।।**

उस आत्मा का सर्वत्र और परिपूर्ण रूप में स्मरण करना चाहिये। ऐसा स्मरण करने वाला सर्वज्ञ सर्वव्यापी सूक्ष्म सर्वेश्वर और सर्वकर्ता हो जाता है।।७५।।

**चिन्मात्रोऽहमिति ध्यातमशिवं त्वात्मतत्त्वकम्।**
**वेदान्ते तु प्रकृत्यूर्ध्वं समनोर्ध्वं शिवाङ्कुरम्।।७६।।**

शिवतत्त्व से भिन्न आत्मतत्त्व का 'चिन्मात्रोऽहम्' के रूप में ध्यान करना चाहिये। यह तत्त्व वेदान्त में प्रकृति, अर्थात् माया से ऊपर का तत्त्व है और शैवशास्त्र में समना से, ऊर्ध्व यह शिवांकुर है।।७६।।

**विषयत्यागाच्च तद्योग इति न्याय इहेष्यताम्।**
**भूलिङ्गं तदिदं चान्यद् द्रष्टा भोक्ताहमादिकाम्।।७७।।**

"विषयों के त्याग से आत्मतत्त्व या शिवतत्त्व से योग होता है" इस सिद्धान्त को यहाँ मानना चाहिये।।७७।।

**वृत्तिं कुर्वन् मनोऽहङ्कृत्सन्त्यागाच्छुद्धविद्यया।**
**सास्त्रया समनान्तं सन्धावद् वृत्तितत्त्वगम्।।७८।।**

**पाशावलोकनं त्यक्त्वा स्वरूपालोकनं हि यत्।**
**आत्मव्याप्तिर्भवेदेषा शिवव्याप्तिरतोऽन्यथा।।७९।।**

यह भूलिंग, अर्थात् पार्थिव लिंग अन्य है। 'अहं द्रष्टा', 'अहं भोक्ता' इत्यादि वृत्ति को करने वाले अहंकार के त्याग से अस्त्रयुक्त शुद्धविद्या के द्वारा समनापर्यन्त जाने वाली वृत्ति में वर्तमान पाश को छोड़कर जो स्वरूप का साक्षात्कार है, यही आत्मव्याप्ति है। शिवव्याप्ति इससे भिन्न प्रकार की है।।७८-७९।।

**शिवोऽहमस्मि धीध्यातशिवत्वेन भवेच्छिवः।**
**परव्याप्तिस्तयोर्मध्ये सर्वगादिगुणात्मिका।।८०।।**

(स्वरूप दर्शन आत्मव्याप्ति है, किन्तु 'शिवोऽहम्' इस प्रकार की वृत्ति का बार-बार ध्यान करने से शिवत्वभाव होने के कारण साधक शिव हो जाता है। उन दोनों व्याप्तियों के मध्य 'अहं सर्वगः', 'शिवोऽहं सर्वगः' इत्यादि गुणों वाली वृत्ति परव्याप्ति कही जाती है।।८०।।

**अहमेव परो देवः सर्वमन्त्रमयः शिवः।**
**सर्वमन्त्रव्यतीतश्च सृष्टिसंहारवर्जितः।।८१।।**

मया व्याप्तमिदं सर्वं दृश्यादृश्यं चराचरम्।
अहमेव जगन्नाथो मत्तः सर्वं प्रकाशते।।८२।।

अनेकाकारसंभिन्नविश्वं भुवनसञ्चयम्।
शिवाद्यवनिपर्यन्तं तत्सर्वं मयि संस्थितम्।।८३।।

यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा।
बहिरन्तर्विभागेन तत्सर्वं व्यापितं मया।।८४।।

मैं ही परदेव हूँ, मैं ही सर्वमन्त्रमय शिव हूँ, मैं समस्त मन्त्रों से परे और सृष्टि-संहार से रहित हूँ, यह दृश्यादृश्य चराचरात्मक समस्त विश्व मेरे द्वारा व्याप्त है, मैं ही संसार का एकमात्र स्वामी हूँ, सब कुछ मुझसे प्रकाशमान है, अनेक आकारों में भिन्न-भिन्न दृश्यमान यह समस्त विश्व समस्त भुवनसमूह, अर्थात् शिव से लेकर पृथिवी पर्यन्त सब कुछ मेरे ही अन्दर स्थित है, इस जगत् के अन्दर-बाहर और भीतर के विभाग से जो कुछ दिखलायी या सुनायी पड़ता है, वह सब मुझसे व्याप्त है— ऐसी धारणा या भावना या उपासना वाला साधक शिवत्व को प्राप्त करता है।।८१-८४।।

अहमात्मा शिवो ह्यन्यः परमात्मेति यः स्मृतः।
एवमुपासयेन्मोहान्न शिवत्वमवाप्नुयात्।।८५।।

मैं जीवात्मा भिन्न हूँ, परमात्मा शिव भिन्न है, जो व्यक्ति मोहवश ऐसी उपासना करता है, वह शिवत्व को नहीं प्राप्त करता।।८५।।

शिवोऽन्यस्त्वहमेवान्यः पृथग्भावं विवर्जयेत्।
यः शिवः सोऽहमेवेति अद्वैतं भावयेत् सदा।।८६।।

शिव अन्य हैं, मैं उनसे भिन्न हूँ— इस प्रकार की पृथक् भावना का त्याग करना चाहिये। जो शिव है मैं भी वहीं हूँ, इस प्रकार सदा अद्वैत-भावना करनी चाहिये।।८६।।

अद्वैतभावनायुक्तः सर्वत्रात्मनि संस्थितः (तम्)।
सर्वगं सर्वदेहस्थं पश्यते नात्र संशयः।।८७।।

जो उपासक सब स्थितियों में सर्वत्र अद्वैत भावना से युक्त होकर सर्वत्र आत्मस्वरूप में स्थित रहता है, अर्थात् अपने को स्थित देखता है,

वह अपने को सर्वव्यापी एवं सभी देहों में स्थित समझता है, इसमें सन्देह नहीं।।८७।।

**एवमेकात्मभावेन संस्थितस्य तु योगिनः।**
**सर्वज्ञत्वं प्रवर्तेत विकल्परहितस्य च।।८८।।**

इस प्रकार सर्वत्र एकात्मभाव में स्थित योगी विकल्परहित हो जाता है और इसके परिणामस्वरूप सर्वज्ञ हो जाता है।।८८।।

**भूतादिमन्त्रपर्यन्तपञ्चात्मोपाधिमोक्षतः।**
**एकात्मेति परश्चेति शिवश्चेति त्रिधैक्यतः।।८९।।**

**सत्स्वात्मशिवतादात्म्यभावनं पारमार्थिकम्।**
**एवमेकात्मभावेन न शिवादिचिदैक्यतः।।९०।।**

**शिवात्मान्तरतादात्म्यं नात्मनः पारमार्थिकम्।**
**एकजातिदृशा सत्यं न सत्यं व्यक्तिदृग्दृशा।।९१।।**

भूतादि से लेकर मन्त्र (=भूतात्मा, अन्तरात्मा, तत्त्वात्मा, जीवात्मा और मन्त्रात्मा) तक की पाँच उपाधियों से रहित होकर एकात्मा, परमात्मा और शिव — इन तीनों के ऐक्य से आत्मा और शिव की तादात्म्यभावना ही परम पुरुषार्थ है, शिव आदि के साथ चित् की एकता परमार्थ नहीं है। शिवात्मा और जीवात्मा का आन्तरिक तादात्म्य परमार्थ नहीं है। उपर्युक्त दोनों को एक जातिवाला देखना परमार्थ है, भिन्न-भिन्न व्यक्ति के रूप में देखना परमार्थ नहीं है।।८९-९१।।

**अलीकं शिवतादात्म्यभावनं च फलप्रदम्।**
**यथा तु गारुडं वेदतात्पर्येऽपि गुरूदितम्।।९२।।**

व्यक्तिगतरूप से शिव के साथ तादात्म्य दर्शन मिथ्या फल देता है, अर्थात् शिवत्वलाभ नहीं कराता। यह उसी प्रकार है, जैसे कि वेदतात्पर्य में गारुडविद्या को भी वेद का तात्पर्य माना है।।९२।।

**एवमेकात्मभावेनेत्यत्र वापि प्रयुज्यताम्।**
**शिववच्छाश्वतः शुद्ध इत्यादिकबहुश्रुतेः।।९३।।**

'एकात्मभावेन' इसका भी तात्पर्य यही समझना चाहिये। जीव 'शिव के समान सदा शुद्ध है' इत्यादि अनेक श्रुतिवाक्य भी यही कहते हैं कि जीव शिव ही है, अन्य नहीं।।९३।।

**स्वशिवत्वं फलं तेन न शिवात्मशिवैक्यकम्।**
**शिवानन्दमनुप्राप्य शिवैकरसतां व्रजेत्।।९४।।**

**इत्यादिका श्रुतिस्तुल्यस्वशिवानन्दवाचिका।**

इसलिये शिवोपासना का फल अपने को शिव समझना है, न कि शिव के साथ अपना तादात्म्य अथवा ऐक्य। "उपासक शैव आनन्द को प्राप्त कर शिव के साथ नीरक्षीरवत् समरस हो जाता है" इत्यादि श्रुतियाँ स्व अर्थात् जीव एवं शिव के तुल्य आनन्द की वाचिका हैं, अर्थात् दोनों एकरूप आनन्दवाले हो जाते हैं।।९४।।

**द्राविडेऽपि क्वचिन्मुक्तिः शिवैक्यान्नहि वास्तवी।।९५।।**

**वेदान्तवत्तु सिद्धान्ते शुद्धाद्वैतं तदुच्यते।**
**साम्यं शिवेन तादात्म्यं शुद्धात्मस्वशिवत्वयोः।।९६।।**

द्राविड़ तन्त्र के अनुसार भी शिवैक्य से किञ्चित्कालिक मुक्ति मिलती है, शाश्वती नहीं। शैवसिद्धान्त मत में भी वेदान्त की भाँति जीवशिवैक्य शुद्धाद्वैत कहा जाता है। शुद्ध स्व एवं शुद्ध शिव का तादात्म्य का तात्पर्य है जीव का शिव के साथ साम्य।।९५-९६।।

**शुद्धाद्वैतं सुसायुज्यं शुद्धसिद्धान्तमद्भुतम्।**
**कामिकादिप्रसिद्धं च शिवस्यान्तप्रबोधितम्।।९७।।**

**शिवत्वव्यक्तिसंपूर्णं शिवानन्दमनिन्दितम्।**
**सशिवसमवादोऽयं साम्यादिति मनो यदि।।९८।।**

**तच्छिवसमवादे तु प्रोक्ता मुक्तिर्विचारिता।**
**सदाशिवसमत्वेन साकल्यादपरा मता।।९९।।**

शुद्धाद्वैतवाद शिव के साथ जीव का सुसायुज्य मानता है। यह अद्भुत शुद्धसिद्धान्त कामिक आदि आगमों में प्रसिद्ध है तथा शिव के अन्त अर्थात् शैवसिद्धान्त के द्वारा प्रबोधित है। यह शिवत्व की सम्पूर्ण अभिव्यक्ति है,

अनिन्दित अर्थात् निर्मल शिवानन्द है, यह शिव के साथ साम्य का वाद अर्थात् सिद्धान्त है। शिव के समवाद में यह मुक्ति कही गयी है। सदाशिव की सम्पूर्ण समता को प्राप्त करना एक अन्य प्रकार की निम्न मुक्ति मानी गयी है।।९७-९९।।

**योऽसौ सर्वेषु शास्त्रेषु पठ्यते ह्यज ईश्वरः।**
**अकायो निर्गुणो ह्यात्मा सोऽहमिति न संशयः।।१००।।**

**अविज्ञातः पशुः सो हि सृष्टिधर्मसमाश्रितः।**
**विज्ञातः शाश्वतः शुद्धः स शिवो नात्र संशयः।।१०१।।**

समस्त शास्त्रों में जिस अजन्मा ईश्वर की चर्चा की गयी है, वह अकाय निर्गुण आत्मा 'सोऽहम्' ज्ञान का विषय है। निःसन्देह वह अज्ञानी पशु है और सृष्टि के धर्म का अश्रयण करने वाला है। जब वह अपने स्वरूप का ज्ञाता हो जाता है, तो वही शाश्वत शुद्ध शिव हो जाता है, इसमें सन्देह नहीं।।१००-१०१।।

**न चैवाभ्यन्तरे बाह्ये नातिदूरे समीपतः।**
**स निष्कले परे स्थाने तत्र चित्तं निवेशयेत्।।१०२।।**

वह न अन्दर है न बाहर, न अत्यन्त दूर है न अत्यन्त समीप[1]। वह निष्कल पर स्थान में स्थित है। उसमें चित्त को लगाना चाहिये।।१०२।।

**तिर्यगूर्ध्वमधश्चैव बहिरन्तश्च नित्यशः।**
**सर्वशून्यं तमाभासमात्मानं भावयेत् सदा।।१०३।।**

वह तिर्यक्, ऊर्ध्व और अधः है; वह नित्य बाहर और भीतर है। उस आत्मा की सर्वशून्य और सर्वत्र आभासमान के रूप में भावना करनी चाहिये।।१०३।।

**सर्वदिग्देशकालेषु योगाभ्यासो विधीयते।**
**सर्ववर्णाश्रमाणां च ज्ञानभेदो न विद्यते।।१०४।।**

---

१. तुलनीय— तदेजति तन्नैजति तद् दूरे तद्वन्तिके।
तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्यतः।। (ई.उ.५)

समस्त दिशाओं में देश-काल में योग के अभ्यास का विधान किया गया है। समस्त वर्णों आश्रमों में रहने वालों के विषय में ज्ञानभेद का विधान नहीं है, अर्थात् अमुक वर्ण में यह ज्ञान होगा, अमुक में नहीं, अमुक वर्ण को उत्कृष्ट ज्ञान होगा, अमुक को अपकृष्ट, ऐसा कोई भेद नहीं है।।१०४।।

**[१]गवामनेकवर्णानां क्षीरस्याप्येकवर्णता।**
**क्षीरवत् पश्यते ज्ञानं लिङ्गिनश्च गवां समाः।।१०५।।**

अनेक वर्ण की गायों का दूध एक वर्ण (श्वेत) होता है। इसी प्रकार ज्ञान सबको एकरूप का होता है या दिखलायी पड़ता है। लिङ्गी लोग अर्थात् नाना मत-मतान्तर को मानने वाले गायों के समान होते हैं।।१०५।।

**यस्मात् सर्वगतं ब्रह्म व्यापकं सर्वतोमुखम्।**
**तस्माद् ब्रह्मणि संस्थाप्य दिग्देशान् न विचारयेत्।।१०६।।**

चूँकि ब्रह्म सर्वव्यापी सर्वगत और सर्वतोमुख है, इसलिये ब्रह्म में स्थित होने के बाद दिग्-देश-काल-पात्र आदि का विचार नहीं करना चाहिये।।१०६।।

**तदुपलक्षितान् कालानर्थानपि च न स्मरेत्।**
**नागतोऽहं गतो वापि नागमिष्ये न गन्तृता।।१०७।।**

**न भूतो न भविष्यामि प्रकृत्यस्थिरधर्मिणी।**
**गच्छंस्तिष्ठन् स्वपन् जाग्रद् भुञ्जानोऽपि पिबन्नपि।।१०८।।**

**सर्वदा सर्वकालेषु वातशीतातपेषु च।**
**भयदारिद्र्यरोगेषु मान्द्यविज्वरकादिषु।।१०९।।**

**आत्मन्येव स्थितः शान्त आत्मतृप्तस्तु निष्कलः।**
**शिवज्ञानामृतं पीत्वा विचरस्व यथासुखम्।।११०।।**

**शिववच्छाश्वतः शुद्धः सृष्टिधर्मविवर्जितः।**
**सत्यं सत्यं पुनः सत्यं त्रिसत्यं समयः कृतः।।१११।।**

---

१. तुलनीय— गवामनेकवर्णानां क्षीरस्याप्येकवर्णता।
क्षीरवत् पश्यते ज्ञानं लिङ्गिनस्तु गवां यथा।। (ब्र.बि.उ.१९)

उस दिग्-देश से उपलक्षित कालों और अर्थों का भी स्मरण नहीं करना चाहिये। मैं न तो कहीं से आया और न कहीं गया, न आऊँगा और न जाऊँगा। न उत्पन्न हुआ, न उत्पन्न होऊँगा। आना-जाना, उत्पन्न होना, नष्ट होना यह सब अस्थिर धर्मवाली प्रकृति है। जाते-खड़े होते, सोते-जागते, खाते-पीते सब समय सर्वदा, वायु शीत धूप में, भय दारिद्र्य रोग में, अग्निमान्द्य, विषम ज्वर आदि में सर्वत्र आत्मतत्त्व में स्थित, शान्त, आत्मतृप्त, निष्कल होते हुए शिवज्ञानरूपी अमृत का पान कर संसार में शिव के समान शाश्वत, शुद्ध तथा सृष्टि के धर्म (=जन्म वृद्धि क्षय आदि) से रहित होकर, सुखपूर्वक विचरण करना चाहिये। यह सत्य है, सत्य है, सत्य है— इस प्रकार तीन बार सत्य कह कर प्रतिज्ञा की गयी है।।१०७-१११।।

**अतः परतरं नास्ति विज्ञेयं कुत्रचिद् गुह!।**
**परात्परतरं वक्ष्ये मन्त्रातीतं निरञ्जनम्।।११२।।**

**निरामयं निराधारं वर्णरूपविवर्जितम्।**
**सर्वज्ञः सर्वगः शान्तः सर्वात्मा सर्वतोमुखः।।११३।।**

**अतीन्द्रियो निरालम्बः सुसूक्ष्मः शाश्वतोऽव्ययः।**
**सुनिष्कलो निरालम्बोऽनाख्येयो व्यापको ध्रुवः।।११४।।**

**निरौपम्योऽप्रमेयश्च परमात्मा प्रकीर्तितः।**
**परस्मिन् तेजसि व्यक्ते तत्रस्थः शिवतां व्रजेत्।।११५।।**

हे गुह! इससे बढ़ कर कहीं भी कोई तत्त्व विज्ञेय नहीं है। अब मैं परात्पर तत्त्व को बतलाऊँगा। वह तत्त्व मन्त्र से परे, निरञ्जन, निरामय, निराधार, रूप-रंग से रहित, सर्वज्ञ, सर्वत्रगामी, शान्त, सर्वात्मा, सर्वतोमुख, अतीन्द्रिय, निरालम्ब, अत्यन्त सूक्ष्म, शाश्वत, अव्यय, निष्कल, निरालम्ब, अनाख्येय, व्यापक, ध्रुव, अनुपमेय, अप्रमेय और परमात्मा कहा गया है। उपासक उस परतेज के व्यक्त होने पर उसमें स्थित होकर शिवत्व को प्राप्त करता है।।११२-११५।।

**परोक्षं स्वशिवज्ञानमपरोक्षमुपास्यताम्।**
**निरामयं निराधारं वर्णरूपविवर्जितम्।।११६।।**

**निरञ्जनं गुणातीतमात्मानं पर्युपासयेत्।**
**निराश्रयं निरालम्बमप्रमेयमनौपमम्।।११७।।**
**स्वभावविमलं नित्यमात्मानं पर्युपासयेत्।**

अपने को शिव समझना, यह ज्ञान परोक्ष है, (क्योंकि इसके ऊपर अन्तःकरण की परिणाम रूप वृत्ति का आवरण है)। इसलिये प्रयत्न कर अपरोक्ष ज्ञान की उपासना करनी चाहिये। आत्मतत्त्व की उपासना उसे निरामय, निराधार, रंगरूप से रहित, निरंजन एवं गुणातीत के रूप में करनी चाहिये। वह आत्मा निराश्रय, निरालम्ब, अप्रमेय, अनुपम, स्वभावतः निर्मल और नित्य है, ऐसी उपासना करनी चाहिये।।११६-११७।।

**संन्यस्य सर्वकर्माणि निस्पृहः सङ्गवर्जितः।।११८।।**

**भावयेदात्मनात्मानमात्मन्येवात्मनः स्थितिः।**
**चिच्छक्त्यां दिवि मुक्तस्य शिवस्येव मता स्थितिः।।११९।।**

(विहित-अविहित, नित्य-नैमित्तिक-काम्य) समस्त कर्मों का न्यास कर, निःस्पृह रहना चाहिये। आत्मा में ही अपनी स्थिति रखनी चाहिये। चित् शक्ति रूपी अन्तरिक्ष में शिव के समान मुक्त व्यक्ति की स्थिति मानी गयी है।।११८-११९।।

**न चास्याविदितं किञ्चिन्न चादृष्टं न चाश्रुतम्।**
**सर्वज्ञः सर्वकृद् भूयात् सर्वगः स शिवप्रभुः।।१२०।।**

इस प्रकार के शिवोपासक के लिये कुछ भी अविदित अदृष्ट और अश्रुत नहीं रहता। वह सर्वज्ञ सर्वकर्ता सर्वगामी और शिव के समान सबका प्रभु हो जाता है।।१२०।।

**आत्मलाभात् परो लाभः क्वचिदन्यो न विद्यते।**
**तदात्मानमुपासीत योऽयमात्मा परस्तु सः।।१२१।।**

आत्मलाभ से बढ़कर कहीं कोई लाभ नहीं है। इसलिये आत्मा की शिव के रूप में उपासना करनी चाहिये। जो यह आत्मा है, वही परतत्त्व अर्थात् परमशिव है।।१२१।।

**इत्येवमधिकारेण सर्वज्ञेनाधिकारिणा।**
**सर्वबन्धाद् विनिर्मुक्तः सर्वज्ञः सर्वगो भवेत्।।१२२।।**

इस प्रकार सर्वज्ञ अधिकारी अधिकारपूर्वक उपासना करने से समस्त बन्धनों से पूर्णतया मुक्त होकर सर्वज्ञ और सर्वगामी हो जाता है।।१२२।।

**सर्वे विनाशका भावा मत्त एव पृथग्विधाः।**
**भावाभावविनिर्मुक्त अहमेव शिवोऽव्ययः।।१२३।।**

**अस्मिताकलया युक्तं चैतन्यं सकलं स्मृतम्।**
**अस्मितारहितं चैतच्चैतन्यं शक्तिरुच्यते।।१२४।।**

'संसार में अभाव से परे मैं ही अव्यय शिव तत्त्व हूँ।' इस प्रकार की अस्मिता कला से युक्त चैतन्य 'सकल' कहलाता है। यही चैतन्य जब अस्मिता से रहित हो जाता है, तब शक्ति कहा जाता है।।१२३-१२४।।

**तया प्रकाशितं विश्वं शक्तिध्यानमुदाहृतम्।**
**सर्वालम्बननिर्मुक्तं निष्कलं ज्ञानमुच्यते।।१२५।।**

यह विश्व उस शक्ति से प्रकाशित है, ऐसी भावना करना शक्ति का ध्यान कहा जाता है। (वही सकल ध्यान है)। समस्त आलम्बन से रहित ध्यान निष्कल ज्ञान कहा जाता है।।१२५।।

**अहमंशेन यच्छून्यं चिन्मात्रालोकमद्वयम्।**
**मुक्तिबीजं तदाख्यातं परयोगप्रवर्तकम्।।१२६।।**

जो ज्ञान 'अहम्' अंश से शून्य, चिन्मात्रालोकवाला तथा अद्वय है, परयोग का प्रवर्तक वह ज्ञान मुक्ति का बीज कहा गया है।।१२६।।

**आत्मा परः शिवश्चेति त्रिपदार्थास्त्रिचेतनाः।**
**त्रिशून्योदयसंभिन्नास्त्वन्तदस्ये( सी )ति सम्भवाः।।१२७।।**

आत्मा, पर और शिव ये तीन पदार्थ तीन चैतन्य वाले हैं। ये तीन शून्य के उदय से संभिन्न 'त्वम्' 'तत्' और 'असि' से उत्पन्न हैं।।१२७।।

**इति त्रिपदलक्ष्यार्थाश्चिन्मात्रपरमुक्तिषु।**
**त्रिस्वनामत्रिकव्याप्तियुक्ता आत्मा परः शिवः।।१२८।।**

ये तीन पद— आत्मा, पर एवं शिव, अर्थात् ज्ञानमात्र की अवस्था, परम अवस्था और मुक्ति की अवस्था — ये तीन अपने नाम की व्याप्ति से युक्त हैं। आत्मा परमशिव है॥१२८॥

**चिन्मात्रः सर्वगः सर्वज्ञतादिगुणकः क्रमात्।**
**आत्मानन्दः परानन्दः शिवानन्दस्त्रिषु क्रमात्॥१२९॥**

यह आत्मा चिन्मात्र, सर्वत्र व्याप्त और क्रमशः सर्वज्ञता[1] आदि गुणों वाला है। तीनों में क्रम से आत्मानन्द, परानन्द और शिवानन्द की स्थिति होती है॥१२९॥

**ध्यानं शिवोऽहमस्मीति शिवायेति तदर्थतः।**
**शिवेति स्वशिवस्फूर्त्या शिवचिन्तनमेव च॥१३०॥**

**केवलकुम्भके ध्यानं समाधिः शून्यकुम्भके।**
**शून्यान्तकुम्भके साक्षात्कारः प्रोक्तः शिवागमे॥१३१॥**

'शिवोऽहमस्मि' यह ध्यान तदर्थ, अर्थात् शिव के लिये है। 'शिव' इस प्रकार की आत्मसम्बन्धी शिवस्फूर्ति के द्वारा शिव का चिन्तन केवल कुम्भक प्राणायाम में किया जाय तो ध्यान, शून्यकुम्भक में किया जाय तो समाधि तथा शून्यान्तकुम्भक में किया जाय, तो शैवागम में यह साक्षात्कार कहा गया है॥१३०-१३१॥

**शाम्भवी खेचरी मुद्रा समग्रसमनाग्रिमा।**
**चिन्मुद्रा मौनमुद्रा च मौनान्ता मुद्रिकाः क्रमात्॥१३२॥**

शाम्भवी और खेचरी मुद्रायें समना स्थिति की पूर्ववर्तिनी होती हैं। चिन्मुद्रा, मौनमुद्रा और मौनान्ता मुद्रायें भी समना स्थिति की पूर्ववर्तिनी हैं॥१३२॥

**शिवोऽहमस्मि लक्ष्यार्थाः परात्मस्वशिवात्मनः।**
**विद्यात्मशिवतत्त्वानि वाच्यार्थास्तदुपाधयः॥१३३॥**

---

१. सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य॥ (वायुपुराण)

परात्मा, स्वात्मा और शिवात्मा पदों का लक्ष्यार्थ 'शिवोऽहमस्मि' भाव है। उसकी उपाधियाँ उनके वाच्यार्थ हैं॥१३३॥

**प्रत्याहारोऽन्तरौन्मुख्यं बाह्यनिवृति जाग्रकम्।**
**धारणा समनाग्रस्था स्वप्नः स्यात् स्वात्मनिष्ठता।।१३४।।**

बाह्य विषयों से निवृत्ति जाग्रत् अवस्था और अन्दर की ओर उन्मुखता प्रत्याहार है। समना धारणा है। स्वात्मनिष्ठ होना स्वप्न है॥१३४॥

**उन्मन्यां ध्यानसुप्तिः स्यादन्ते तुर्यं समाधिकम्।**
**साक्षात्कारोऽतितुर्यं स्यादुदग्रं तदुदीरितम्।।**
**ध्यानादित्रयसंबन्धाच्चिन्मात्रात्मा परः शिवः।।१३५।।**

उन्मनी अवस्था ध्यान एवं सुषुप्ति है। उन्मनी अवस्था का अन्त तुरीय अवस्था या समाधि है। स्वात्मा या शिव का साक्षात्कार तुरीयातीत अवस्था है, जिसे उदग्र कहा गया है। ध्यान आदि तीन के सम्बन्ध से यह जीव चिन्मात्र परशिव हो जाता है॥१३५॥

**चैतन्यं दृक्क्रियारूपं तदस्त्यात्मनि सर्वदा।**
**सर्वतश्च यतो मुक्तौ श्रूयते सर्वतोमुखम्।।१३६।।**

चैतन्य ज्ञानक्रिया रूप है और आत्मा में सर्वदा रहता है। चूँकि यह आत्मा सब प्रकार से मुक्त है, इसलिये इसे सर्वतोमुख कहा जाता है॥१३६॥

**चिद्रूपमात्मनो रूपं दृक्क्रियागुणलक्षितम्।**
**ज्ञानरूपस्य तस्यापि स्वरूपं दृक्क्रियात्मकम्।।१३७।।**

चैतन्य स्वरूप होना आत्मा का स्वभाव है और यह ज्ञानक्रिया गुणवाला है। ज्ञानरूप उसका स्वरूप ज्ञानक्रियात्मक है॥१३७॥

**हृत्सरोजे ह्यहंरूपा या चितिर्निष्कलाऽचला।**
**अहङ्कारपरित्यागात् सा चितिर्मोक्षदायिनी।।१३८।।**

हृदयकमल में जो अहंरूपा निष्कल अचल चिति है, उसमें से अहङ्कार को हटा देने से जो केवल चिति बचती है, वह मोक्षदायिनी होती है॥१३८॥

**एकान्तकुम्भकस्यान्तरोंहौमुद्धृतिलिङ्गिनः।**
**क्षुरिकास्त्राङ्गमूलस्य शुद्धविद्यात्मनः स्मृतेः।।१३९।।**
**निर्मनोनिरहङ्काराद् यावत्तत्त्वं शिवाह्वयम्।**
**सर्वोपाधिविनिर्मुक्तं चिद्रूपं यन्निरन्तरम्।।१४०।।**
**तच्छिवोऽहमिति ध्यात्वा सर्वासक्तिं विवर्जयेत्।**

एकान्त कुम्भक के अन्दर 'ओं हौं' ऐसी उद्भावना वाले लिङ्गी, क्षुरिका अस्त्र, अंगमूल एवं शुद्धविद्या वाले की स्मृति जब मन एवं अहंकार से रहित होकर सम्पूर्ण तत्त्व को शिवात्मक, सर्वोपाधि से रहित एवं निरन्तर चिद्रूप समझती है, वही शिवात्मक ज्ञान है। 'मैं वह शिव हूँ' ऐसा ध्यान कर ध्याता सम्पूर्ण आसक्ति को छोड़ देता है।।१३९-१४०।।

**देशजात्यादिसंबन्धान् वर्णाश्रमसमन्वितान्।।१४१।।**
**भावानेतान् परित्यज्य स्वभावं भावयेद् बुधः।**

देश-जाति आदि सम्बन्धों, वर्ण-आश्रम आदि व्यवस्थाओं के भावों को छोड़कर विद्वान् को स्वभाव की भावना करनी चाहिये।।१४१।।

**अहमेको न मे कश्चिन्नाहमन्यस्य कस्यचित्।।१४२।।**
**न तं पश्यामि यस्याहं तन्न पश्यामि यो मम।**
**नास्ति स्वस्वामिसंबन्धः शिवतुल्यगुणस्मृतेः।।१४३।।**

'मैं अकेला हूँ', 'कोई भी मेरा नहीं है', 'मैं अन्य किसी का नहीं हूँ', मैं ऐसे किसी को भी नहीं देख रहा हूँ' जिसका मैं हूँ, अथवा जो मेरा हो', जीव शिवतुल्य गुणवाला है। ऐसी स्मृति से (मेरे और अन्य के अथवा मेरे और शिव के बीच) स्वस्वामिभाव रूप सम्बन्ध नहीं है।।१४२-१४३।।

**सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्।**
**वश्योऽनावृतवीर्यस्य स्वत एव विमोक्षणात्।।१४४।।**

दूसरे के अधीन रहना सम्पूर्ण दुःख है। अपने अधीन रहना सम्पूर्ण सुख है। अनावृत, अर्थात् सम्पूर्ण पराक्रम वाला किसी के वश में नहीं रहता, क्योंकि वह स्वयं मुक्त है।।१४४।।

**अहमेव परब्रह्म जगन्नाथोऽहमीश्वरः।**
**इति स्यान्निश्चितो मुक्तो बद्धः स्यादन्यथा पुमान्।।१४५।।**

'मैं ही परब्रह्म हूँ', 'जगन्नाथ हूँ', 'मैं ही ईश्वर हूँ' — ऐसे निश्चय वाला मुक्त होजाता है। इससे अन्य प्रकार की धारणा वाला पुरुष बद्ध होता है।।१४५।।

**शिवमेव स्वयं भाव्य स्वयमेव शि( वं?वो ) भवेत्।**
**समरसीभावयोगेन तत्समाधिरिहोच्यते।।१४६।।**

स्वयं की शिव के रूप में भावना कर स्वयं शिव हो जाना चाहिये। शिव के साथ समरस होना ही शैवागम में समाधि कही जाती है।।१४६।।

**ऐकान्तिकं सुखं यत्र तथैवात्यन्तिकं भवेत्।**
**निष्कर्मणि परे तत्त्वे को न रज्येत पण्डितः।।१४७।।**

जहाँ ऐकान्तिक (=सम्पूर्ण) सुख है, वही आत्यन्तिक (अनश्वर) सुख भी है। (इस प्रकार का उभयविध सुख कर्म से अप्राप्य परतत्त्व में है) ऐसे परतत्त्व में कौन पण्डित आसक्त नहीं होगा।।१४७।।

**निवृत्तो विषयज्ञानान्निष्कलध्यानतत्परः।**
**अनिच्छन्नपि मेधावी लभते मोक्षमक्षयम्।।१४८।।**

विषयों के ज्ञान से निवृत्त, निष्कल ध्यान में तत्पर मेधावी इच्छा न करता हुआ भी अक्षय मोक्ष को प्राप्त करता है।।१४८।।

**ज्ञानामृतरसो येन सकृदास्वादितो भवेत्।**
**स सर्वकार्याण्युत्सृज्य तत्रैव परिधावति।।१४९।।**

जिसने एक बार शिवज्ञान रूपी अमृत रस का आस्वादन कर लिया है, वह सांसारिक जीव सारे कार्यों को छोड़कर उसी दिशा में दौड़ता है।।१४९।।

**गोदोहमिषुपातं वा नयनोन्मेषमात्रकम्।**
**सकृत् परपदे युक्तो मुक्तः शिवसमः स्मृतः।।१५०।।**

गोदोह (गाय के दुहने), इषुपात (बाण के लक्ष्य तक पहुँचने अथवा नेत्र के उन्मेषमात्र काल के लिये भी यदि साधक एक बार

परमपद से संयुक्त हो जाता है, तो वह मुक्त होकर शिव के समान हो जाता है॥१५०॥

**निरस्य वासनाः सर्वा मनोवृत्तिं विवर्जयेत्।**
**आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्॥१५१॥**

समस्त वासनाओं का त्याग कर मन की जिस वृत्ति में ये वासनायें रहती हैं, उस वृत्ति को भी छोड़ देना चाहिये[1]। मन को आत्मकेन्द्रित कर किसी का भी ध्यान नहीं करना चाहिये॥१५१॥

**आत्ममध्ये शिवं कुर्याच्छिवमध्ये तमात्मकम्।**
**साक्षाच्छिवम( हं?यो ) भूत्वा न किञ्चिदपि चिन्तयेत्॥१५२॥**

आत्मा के मध्य में शिव को और शिव के मध्य में आत्मा को रखना चाहिये। इस प्रकार साक्षात् शिवमय होकर फिर किसी का भी चिन्तन नहीं करना चाहिये॥१५२॥

**एवमातिष्ठतस्तस्य विनैवाकरकल्पनाम्।**
**अकिञ्चिच्चिन्तकस्यास्य रूपमुन्मीलितं स्वकम्॥१५३॥**

इस प्रकार से वर्तमान में रहने वाले पुरुष का बिना शास्त्रों के अध्ययन के किञ्चित् चिन्तन न करने वाले को अपने स्वरूप का साक्षात्कार हो जाता है॥१५३॥

**सर्वार्थदृक्क्रियारूपमानन्दमयमव्ययम्।**
**सर्वार्थभासकं ज्ञानं शिवयोगं तु शाश्वतम्॥१५४॥**

जो ज्ञान सर्वार्थदृक्क्रियारूप है, आनन्दमय, अव्यय है, सर्वार्थभासक है, वह ज्ञान शाश्वत शिवयोग है॥१५४॥

**प्रकाशयति मुक्त्यर्थं मुमुक्षूणामयं शिवः।**
**मुक्तिशब्दोदिता मुक्तिः सर्वथा व्यक्तिरेव च॥१५५॥**

---

१. तुलनीय— त्यज धर्ममधर्मं च उभे सत्यानृते त्यज।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत् त्यज॥

यह शिव मोक्षार्थियों की मुक्ति के लिये इस ज्ञान को प्रकाशित करते हैं। 'मुक्ति' शब्द से कही गयी मुक्ति सर्वथा अपने स्वरूप की अभिव्यक्ति है।।१५५।।

**शिवार्कशक्तिदीधित्या समर्थीकृतचिद्दृशा।**
**शिवं शक्त्यादिभिः सार्धं पश्यत्यात्मा गतावृतिः।।१५६।।**

यह आत्मा शिवरूपी सूर्य की शक्तिरूपी किरणों के द्वारा समर्थ बनाये गये ज्ञानरूपी नेत्रों से अज्ञानावरण रहित होकर शक्ति आदि के साथ शिव का साक्षात्कार करता है।।१५६।।

**अप्राकृतेन नित्येन निर्मलेनाविकारिणा।**
**व्यापकेनातिसूक्ष्मेण परेण योगचक्षुषा।।१५७।।**

**द्विशिवग्राहिचिच्छक्तियुग्मप्रत्यक्षवर्त्मना।**
**विशुद्धं शाश्वतं नित्यमप्रमेयमनौपमम्।।१५८।।**

**निर्विकल्पमचिन्त्यं च हेतुदृष्टान्तवर्जितम्।**
**सुतृप्तं निर्गुणं शान्तं तत्त्वातीतं निरञ्जनम्।।१५९।।**

**अविभाव्यमसन्देहं पश्यन्नीशानमात्मनि।**
**सर्वगं सर्वदेहस्थं व्यापकं सर्वतोमुखम्।।१६०।।**

योगी अप्राकृत नित्य निर्मल निर्विकार व्यापक अत्यन्त सूक्ष्म पर योगचक्षु के द्वारा दो शिव के ग्राही चित् शक्ति के दो प्रत्यक्ष मार्ग के द्वारा, विशुद्ध शाश्वत नित्य अप्रमेय अतुल्य निर्विकल्प अचिन्त्य हेतुदृष्टान्तरहित, सुतृप्त निर्गुण शान्त तत्त्वातीत निरञ्जन अविभाव्य असन्दिग्ध शिव को अपने अन्दर देखता है। इसके फलस्वरूप वह अपने को सर्वगामी सर्व-देहस्थ व्यापक सर्वतोमुख निरामय निराधार शिवस्वरूप देखता है।।१५७-१६०।।

**निरामयं निराधारमात्मानं पश्यते शिवम्।**
**विभिन्नं प्रक्रियामार्गं मन्त्रतन्त्रं परापरम्।।१६१।।**

**मूर्तामूर्तं जगत्कृत्स्नं पश्यत्यात्मन्युपस्थितम्।**
**सर्वज्ञः सर्वदर्शी च परिपूर्णः सुनिर्मलः।।१६२।।**

**विमुक्तः केवलीभूतः सुखमक्षयमाप्नुयात्।**
**निस्तत्त्वे निष्कलीभूते विन्दत्यात्मनि यत्सुखम्।।१६३।।**

**निर्विकल्पमचिन्त्यं च हेतुदृष्टान्तवर्जितम्।**
**तत्सुखं परमं प्रोक्तमात्यन्तिकमनौपमम्।।१६४।।**

वह अपने को निरामय निराधार शिवस्वरूप समझता है। अपने अन्दर विभिन्न प्रक्रिया मार्ग से योगी सर्वज्ञ सर्वदर्शी परिपूर्ण सुनिर्मल विमुक्त और केवली होकर अक्षय सुख को प्राप्त करता है। आत्मा के निस्तत्त्व और निष्कल होने पर साधक जिस सुख को प्राप्त करता है, वह परम आत्यन्तिक, अर्थात् कभी नष्ट न होने वाला तथा अतुलनीय होता है।।१६१-१६४।।

**निरस्य विषयासङ्गं मनोवृत्तिं विवर्जयेत्।**
**यदा यात्युन्मनीभावं तदा तत्परमं सुखम्।।१६५।।**

**सद्भोगं वाङ्मनोऽतीतं स्वयमेवानुभूतिमान्।**
**तदेव शिवभोगश्च तदेव परमं सुखम्।।१६६।।**

विषयों के प्रति आसक्ति को छोड़कर मन की वृत्ति का त्याग कर देना चाहिये। ऐसा होने के बाद साधक जब समना से ऊपर के स्तर उन्मना में पहुँचता है, तब वह उस परम सुख को प्राप्त होता है। वह वाणी और मन से परे सद्भोग का स्वयं अनुभव करता है। यही भोग शिवभोग है और यही परम सुख है।।१६५-१६६।।

**ज्ञानामृतसुतृप्तस्य कृतकृत्यस्य योगिनः।**
**नैवास्ति किञ्चित् कर्तव्यमस्ति चेन्न स तत्त्ववित्।।१६७।।**

ज्ञान के अमृत से पूर्णरूपेण तृप्त योगी के लिये इस संसार में कुछ भी करणीय नहीं रहता। यदि कुछ करणीय शेष बचता है, तो फिर वह योगी नहीं है।।१६७।।

**पशुभावाद्यदातीत्य पतिभावेन तिष्ठति।**
**तत्तस्य गमनं नाम सर्वगे गमनं कुतः।।१६८।।**

योगी पशुभाव आदि को पारकर जब पतिभाव में रहने लगता है, तो वहीं उसका गमन है। अन्यथा जब वह योगप्रभाव से सर्वगामी हो गया, तो फिर उसका एक स्थान से दूसरे स्थान में गमन कैसा?॥१६८॥

**उन्मनत्वं शिवत्वं च प्रयातीत्युपचर्यते।**
**संबोधो गमनं नाम सर्वगे गमनं कुतः॥१६९॥**

योगी उन्मनीभाव और शिवभाव को प्राप्त होता है— यह कथन लाक्षणिक है। उसका शिवतत्त्व का सम्यक् बोध ही गमन है, क्योंकि सर्वव्यापी के विषय में गमन की चर्चा कैसे हो सकती है?॥१६९॥

**स्वान्यप्रकाशविज्ञप्तिः सच्चिदानन्दलक्षणः।**
**प्रभुः सर्वत्र चेता च व्यापी सूक्ष्मः शिवोऽव्ययः॥१७०॥**

**सर्वज्ञः स शिवो यद्वत् किञ्चिज्ज्ञत्वविवर्जितः।**
**शिवत्वव्यक्तिसंपूर्णः संसारी न भवेत् पुनः॥१७१॥**

अपने तथा अन्य के प्रकाश के ज्ञान से युक्त वह शिव सत्-चित्-आनन्द स्वरूप, सर्वत्र प्रभु, चेतनयुक्त, व्यापक सूक्ष्म और अव्यय है। जिस प्रकार शिव किञ्चिज्ज्ञत्व रहित होता हुआ सर्वज्ञ है। योगी शिवत्व के साक्षात्कार से पूर्ण होकर पुनः संसारी नहीं होता॥१७०-१७१॥

**गलिते सर्वथा बन्धे विमुक्ते चाणवे मले।**
**सर्वार्थद्योतिका शक्तिः शिवस्येव विजृम्भते॥१७२॥**

**ततो विमुक्ताः सर्वज्ञा न तु चिन्मात्रवेदिनः।**
**ब्रह्मादिस्थावरान्तस्य भूतवर्गस्य कृत्स्नशः॥१७३॥**

**निरपेक्ष्य करोत्याशु अणोरात्मसमं बलम्।**
**शिवत्वोद्रेकदृष्ट्या तु कुर्यादिति श्रुतेर्बलात्॥१७४॥**

योगी का बन्धन जब पूर्णरूपेण विगलित हो जाता है तथा वह आणव मल से मुक्त हो जाता है, तब उसके अन्दर शिव के समान सर्वार्थद्योतिका शक्ति स्फुरित होने लगती है। उक्त शक्ति के उद्दीप्त होने के बाद सर्वज्ञ मुक्त हो जाते हैं। केवल वह योगी चिति शक्ति के सम्पन्न जीव का ही नहीं, ब्रह्मा से लेकर स्थावर पर्यन्त समस्त भूतवर्ग की

अपेक्षा के बिना ही अणु अर्थात् लघुतम पदार्थ को भी अपने समान बलशाली बना देता है। 'यह शिवत्व के उद्रेक की दृष्टि से करता है' ऐसा श्रुति कहती है॥१७२-१७४॥

**आद्यनादी च मुक्ती द्वेऽनपेक्ष्य कुरुते बलम्।**
**अपयाते मले तस्मिन् सर्वत्रोदितदृक्क्रियः॥१७५॥**

**निरातङ्कं निराबाधं शिवत्वमधिगच्छति।**
**मतङ्गे च पराख्ये च अपृथक्कृत्यमीरितम्॥१७६॥**

वह आदि और अनादि दोनों मुक्तियों की अपेक्षा न कर बल का आधान करता है। जब उसका आणव मल हट जाता है, तो वह सर्वत्र उदित ज्ञान-क्रिया वाला हो जाता है, फिर वह योगी बिना किसी भय अथवा बाधा के शिवत्व को प्राप्त करता है। यह तथ्य मतंग एवं पराख्य दोनों तन्त्रों में एकरूप से कहा गया है॥१७६॥

**तयोपोद्वलिता चित् स्यात् चेतनोद्वलने क्षमा।**
**चैतन्यमपि तद्योगादनुगृह्णाति पुद्गलम्॥१७७॥**

उस दृक्क्रिया से उद्वलित चित् चेतन के उद्वलन में सक्षम होती है। चैतन्य भी उस चित् के योग से पुद्गल को अनुगृहीत करता है॥१७७॥

**संसिद्धः शिववत् कर्ता न मोक्षे पक्षपातता।**
**सर्वतः कृतकृत्यश्चिद्विकृतिस्तत्र नोद्भवेत्॥१७८॥**

सिद्धयोगी शिव के समान कर्ता होता है। मोक्ष में पक्षपात नहीं, अर्थात् मुक्त पुरुष शिव से न्यूनशक्ति-सम्पन्न होते हैं, ऐसा नहीं है। जब चित् शक्ति सर्वविध कृतकृत्य हो जाती है, तब वहाँ विकार नहीं होता॥१७८॥

**सर्वज्ञता तृप्तिरनादिबोधः**
**स्वतन्त्रता नित्यमलुप्तशक्तिः।**
**अनन्तशक्तिश्च निरामयात्मा**
**विशुद्धदेहः स शिवत्वमेति॥१७९॥**

सर्वज्ञता, नित्यतृप्ति, नित्यज्ञान, स्वातन्त्र्य, शक्ति का कभी न्यून न होना और असीम शक्ति का होना— यह शिव के छः गुण योगी के अन्दर उपस्थित हो जाते हैं। इस प्रकार निरामय आत्मा वाला योगी विशुद्ध देह होकर शिवत्व को प्राप्त करता है।।१७९।।

**नात्मच्छेदोऽपवर्गो न च पशुशिवयोरैक्यमत्रापवर्गो**
**नाविद्याग्रासहानिर्न च गुणविलयो नापि पाषाणमुक्तिः।**
**यद्बोधानन्दरूपं त्रिमलविगमने व्यक्तमात्मस्वरूपं**
**तत्सायुज्येन वाच्यं शिवसदृशविभुः शैवतन्त्रेऽपवर्गः।।१८०।।**

इस शैवशास्त्र में आत्मा का उच्छेद मोक्ष नहीं है (जैसा कि बौद्धमत का सिद्धान्त है)। पशु और शिव का ऐक्य भी मोक्ष नहीं है। अविद्या से ग्रस्त होने का अभाव, गुणों का विलय भी मोक्ष नहीं है। जीव का पाषाण, के समान होना (जैसा कि नैयायिक कहते हैं) भी मोक्ष नहीं है। आणव मायीय और कार्म नामक तीन मलों के दूर हो जाने पर जो आनन्दरूप बोधात्मक आत्मा की अभिव्यक्ति है, वही शिवसायुज्य कहा जाता है और आत्मा का शिव के समान व्यापक होना ही शैवशास्त्र में अपवर्ग है।।१८०।।

**नेदं सायुज्यकं सार्ष्टिरिति पक्षः पलायितः।**
**सायुज्यमिदमेवेति कामिकेऽपि समर्थितम्।।१८१।।**

''यह सायुज्य नहीं, बल्कि सार्ष्टि है'' यह पक्ष यहाँ खण्डित हो जाता है। वस्तुतः यह सायुज्य मुक्ति ही है— ऐसा कामिक आगम में भी माना गया है।।१८१।।

**ब्रह्मणाप्यन्यथाकर्तुमशक्यं लिख्यते मया।**
**त्रिमलापगमे व्यक्तशिवसाम्यत्वलक्षणम्।।१८२।।**
**आत्मरूपं चिदानन्दमयं सायुज्यनामकम्।**

जो मैं (=ज्ञानप्रकाश) लिख रहा हूँ, ब्रह्मा भी इसको नहीं बदल सकते। त्रिविध मल के दूर होने पर शिवसाम्य रूप मोक्ष मिलता है, यह स्पष्ट है।।१८२।।

**निजानन्दमहाम्भोधौ यदा मज्जेदनाकुलः।।१८३।।**
**सा मुक्तिः स तु निर्वाणस्तदेव परमं पदम्।**

आत्मा का चिदानन्दमय हो जाना ही सायुज्य नामक मोक्ष है। योगी जब निजानन्द महासमुद्र में शान्त होकर डूब जाता है, तो वही मुक्ति है, वही निर्वाण है, वही परम पद की प्राप्ति है॥१८३॥

**चिन्त्यविश्वोदितं शैवपुराणोक्तं च लिख्यते।।१८४।।**

**सकले निष्कले चैव सर्वत्रैव समानता।**
**सायुज्यमिति तत्प्रोक्तं सारूप्यं मूर्तितुल्यता।।१८५।।**

चिन्त्य और विश्व नाम के आगमों में वर्णित तथा शैवपुराण में कथित विषय को यहाँ लिखा जा रहा है— सकल और निष्कल में सर्वत्र समानता रहती है। इसीको सायुज्य कहा गया है। सारूप्य का अर्थ है— मूर्ति के तुल्य हो जाना॥१८४-१८५॥

**शिवसंक्रान्तिरस्माकं मुक्तिरेवेति केचन।**
**अमूर्तस्य च संक्रान्तौ न लोका न परीक्षकाः।।१८६।।**

कुछ लोग कहते हैं कि शिवसंक्रान्ति ही हमारी मुक्ति है, किन्तु शिव तो अमूर्त है, फिर उसकी संक्रान्ति के विषय में न कोई समर्थ है और संक्रान्ति हुई या नहीं और हुई तो पूर्ण हुई या अपूर्ण, समीचीन हुई या असमीचीन— ऐसी परीक्षा करने वाला भी कोई नहीं है॥१८६॥

**सर्वज्ञाद्यं शिवैश्वर्यं यत्तु स्वात्मनि राजते।**
**तत्सायुज्यमिति प्राहुर्वेदागमपरायणाः।।१८७।।**

सर्वज्ञता आदि तो शिव का ऐश्वर्य है। जब यह अपने अन्दर विराजमान होता है, तो वेद एवं आगम के विद्वान् उसे सायुज्य कहते हैं॥१८७॥

**संसारमण्डलं कृत्स्नमादिमध्यान्तसंस्थितम्।**
**सर्वमात्मनि पश्येत न च संयुज्यते विभुः।।१८८।।**

सम्पूर्ण संसार मण्डल को, जो आदि, मध्य और अन्त अर्थात् पूर्णरूप से अपने में स्थित हुआ देखता है, वह विभु शिव से संयुक्त नहीं होता॥१८८॥

**सर्ववस्तुष्वनुस्यूतमस्पृश्यं सर्ववस्तुभिः।**
**सर्वं व्याप्यावतिष्ठेत न च संयुज्यते प्रभुः।।१८९।।**

समस्त वस्तुओं में अनुस्यूत होता हुआ भी सभी वस्तुओं से अस्पृश्य होकर सबको व्याप्त कर जो विराजमान रहता है, वह प्रभु भी संयुक्त नहीं होता॥१८९॥

**इति श्रुतेः स मुक्तोऽपि न च संयुज्यते शिवे।**
**शिवतुल्यार्थसायुज्यदं शिवयोगरत्नकम्॥१९०॥**

इस श्रुतिवचन के अनुसार मुक्त होने पर भी वह शिव से युक्त नहीं होता। यह शिवयोगरत्न नामक ग्रन्थ शिवतुल्य होने को शिवसायुज्य बतलाता है॥१९०॥

**यस्य यत्राभिसंबन्धो दूरस्थस्यापि तत्र सः।**
**इति प्रबलमीमांसान्यायो मातङ्गबोधितः॥१९१॥**

"दूरस्थ रहते हुए भी जिसका जिससे सम्बन्ध होता है, वह वहाँ रहता है" यह प्रबल मीमांसान्याय, मातङ्गेश्वरतन्त्र में भी बतलाया गया है॥१९१॥

**तच्चेत्थमभिसंबध्य प्रकृतं संग्रहात्मकम्।**
**इदं व्यस्तं समस्तं वा भाषाभेदैर्न लिख्यताम्॥१९२॥**

**शिवदीक्षाविशुद्धाय साधवे देयमीरितम्।**

उसको इस प्रकार समझ कर प्रस्तुत संग्रह किया गया है। इसको विस्तार या संक्षेप किसी भी प्रकार से अन्य भाषाओं में उपनिबद्ध नहीं करना चाहिये। केवल शिवदीक्षा से विशुद्ध मुमुक्षु को ही इसे देना चाहिये॥१९२॥

***तदित्थंभूतं शिवात्मशिवस्वात्मशिवयोः स्वरूपलक्षणपरार्थ-स्वार्थसर्वार्थप्रत्यर्थं विषयनिर्विकल्पसविकल्पज्ञानक्रिया-वृत्तिकं स्वपरप्रकाशद्विरूपैकरूपचिच्छक्तिरूपं सच्चिदानन्दसर्वज्ञतादिगुणरूपं शिवत्वं तत्स्वरूपलक्षणप्रबोधकं शिवयोगरत्नं संपूर्णम्॥***

इस प्रकार शिवात्म और शिवस्वात्म नामक दोनों शिवों के स्वरूप
लक्षण परार्थ-स्वार्थ सर्वार्थ प्रत्यर्थ वाले निर्विकल्प सविकल्प
ज्ञानक्रियावृत्तिवाले, स्वपरप्रकाशद्विरूप एकरूप चित्-
शक्तिवाले, सच्चिदानन्द सर्वज्ञतादिगुण वाले,
शिवत्व के स्वरूपलक्षण के प्रबोधक,
शिवयोगरत्न नामक ग्रन्थ की
पं. राधेश्याम चतुर्वेदी
कृत 'ज्ञानवती'
नामक हिन्दी
व्याख्या पूर्ण
हुई ।।



## शिवयोगरत्नम्, उद्धृता ग्रन्था:





# श्लोकार्धानुक्रमणी

## पुस्तक परिचय

भारतीय धर्मदर्शन की शैवपरम्परा में दक्षिणभारत का शैव-सिद्धान्त विशेष महत्त्वपूर्ण एवं प्राचीन परम्परा है। तमिल भाषा में रचित सम्पूर्ण शैवशास्त्र को दो भागों में विभाजित किया जा सकता है— स्तोत्र एवं शास्त्र। पूर्व का स्तोत्र साहित्य, जो उच्चकोटि के साधकों की आध्यात्मिक रचनाएँ हैं, वास्तव में उत्तरकाल के सैद्धान्तिक विकास का मूल स्रोत एवं आधार है। इन रचनाओं को बारह ग्रन्थों में संकलित किया गया है, जिन्हें 'तिरुमुरई' कहते हैं।

शैवसिद्धान्त दर्शन का द्वितीय स्तर मैकण्ड-शास्त्र से शुरू होता है, जो पूर्णत: अद्वैतवादी दृष्टिकोण का प्रतिपादन करता है। बारहवीं शताब्दी में श्रीकण्ठ द्वारा रचित ब्रह्मसूत्रभाष्य शिवाद्वैतवाद का प्रतिपादक है।

तेरहवीं शताब्दी में मैकण्डदेव द्वारा विरचित 'शिवज्ञानबोधम्' की संस्कृत प्रति रौरव आगम में प्राप्त होती है, ऐसा कहा जाता है। परन्तु यह निर्विवाद रूप से प्रतिपादित नहीं हो पाया है। इस सूत्र-ग्रन्थ के बाद इसी क्रम को विकसित करते हुए जिन ग्रन्थों की रचना हुई है, उनका विवरण प्रस्तुत किया जा रहा है—

१. मैकण्डदेव के शिष्य सन्त अरुलनन्दी शिवाचार्य ने शिवज्ञानबोधम् के विशद भाष्य के रूप में शिवज्ञानसिद्धियार नामक एक स्वतन्त्र ग्रन्थ की रचना की है। २. चौदहवीं शताब्दी में सन्त अरुलनन्दी शिवाचार्य के शिष्य सन्त उमापति शिवाचार्य ने शिवप्पिरकाशम् नामक एक महत्त्वपूर्ण ग्रन्थ की रचना की है। ३. सोलहवीं शताब्दी में पाण्डिप्पेरुमाल एवं और कई विशद ग्रन्थों की रचनाएँ हुई, उनमें मापाडियम् (महाभाष्य) विशेष महत्त्वपूर्ण है।

शिवज्ञानसिद्धियार के रचयिता सन्त अरुळनन्दी शिवाचार्य एक महान् दार्शनिक भी थे। उनकी विद्वत्ता के कारण उन्हें सकलागमपण्डित के रूप में अभिहित किया जाता है। उक्त ग्रन्थ की रचना दो भागों में की गई है— (१) परपक्कम् (परपक्ष), (२) सुपक्कम् (स्वपक्ष)। यहाँ तीन सौ अट्ठाईस (३२८) पदों के माध्यम से शैवसिद्धान्त के मुख्य तात्त्विक विषयों का विवेचन प्रस्तुत किया गया है।

ज्ञानप्रकाशर— जो पुन: सोलहवीं शताब्दी के हैं, शिवज्ञानसिद्धियार के वृत्ति-ग्रन्थ के रूप में 'शिवयोगरत्नम्' की रचना की। ज्ञानप्रकाशर ने सरल भाषा में शिवज्ञानसिद्धियार के तात्त्विक विवेचन पर 'शिवयोगरत्नम्' नामक जिस ग्रन्थ की रचना की है, वह शिवयोग पर विशेष मूल्यवान् ग्रन्थ है। उक्त ग्रन्थ में विद्वान् लेखक ने शिवयोग की विशिष्टता का प्रतिपादन किया है।

**शैवभारती शोध प्रतिष्ठान**

**डी. 35/77, जंगमवाडीमठ**

**वाराणसी-221001**

**Price : Rs. 150.00**